।।आत्मविद्याविलासः।।

वटतरुनिकटनिवासं पटुतरविज्ञानमुद्रितकराब्जम्।
कञ्चन देशिकमाद्यं कैवल्यानन्दकन्दलं वन्दे।।१।।
निरवधिसंसृतिनीरधिनिपतितजनतारणस्फुरन्नौकाम्।
परमतभेदनघुटिकां परमशिवेन्द्रार्यपादुकां नौमि।।२।।
देशिक परमशिवेन्द्रादेशवशोद्बुद्धदिव्यमहिमाऽहम्
स्वात्मनि विश्रान्तिकृते सरसं प्रस्तौमि किञ्चिदिदम्।।३।।
निरुपमनित्यनिरीहो निष्कलनिर्मायनिर्गुणाकारः।
विगलितसर्वविकल्पःशुद्धो बुद्धश्चकास्ति परमात्मा।।४।।
स्वाविद्यैकनिबद्धः कुर्वन्कर्माणि मुह्यमानः सन्।
दैवाद्विधूतबन्धः स्वात्मज्ञानान्मुनिर्जयति।।५।।
मायावशेन सुप्तौ मध्ये पश्यन्सहस्रशः स्वप्नान्।
देशिकवचःप्रबुद्धो दीव्यत्यानन्दवारिधौ कोऽपि।।६।।
प्राकृतभावमपास्य स्वीकृतनिजरूपसच्चिदानन्दः।
गुरुवरकरुणापाङ्गाद् गौरवमासाद्य माद्यति प्राज्ञः।।७।।
श्रीगुरुकृपया सच्चित्सुखनिजरूपे निमग्नधीर्मौनी।
विहरति कश्चन विबुधः शान्ताहन्तो नितान्तमुदितान्तः।।८।।
गुरुवरकरुणालहरीव्यतिकरभरशीतलस्वान्तः।
रमते यतिवर एको निरुपमसुखसीमनि स्वैरम्।।९।।
श्रीदेशिकवरकरुणारविकरसमपोहितान्तरध्वान्तः।
विहरन्मस्करिवर्यो निरवधिकानन्दनीरधावास्ते।।१०।।
जनिविपरीतक्रमतो बुद्ध्या प्रविलाप्य पञ्चभूतानि।
परिशिष्टमात्मतत्त्वं पश्यन्नास्ते मुनिः शान्तः।।११।।

जगदखिलमिदमसारं मायिकमेवेति मनसि मन्वानः।
पर्यटति पाटिताशः प्रगलितमदमानमत्सरः कोऽपि।।१२।
नात्मनि किञ्चिन्माया तत्कार्यं वाऽस्ति वस्तुतो विमले।
इति निश्चयवानन्तःहृष्यत्यानन्दनिर्भरो योगी।।१३।।
त्वमहमभिमानहीनो मोदितनानाजनाचारः।
विहरति बालवदेको विमलसुखाम्भोनिधौ मग्नः।।१४।।
अवधूतकर्मजालो जडबधिरान्धोपमः कोऽपि।
आत्मारामो यतिराट् अटवीकोणेष्वटन्नास्ते।।१५।।
शान्त्या दृढोपगूढः शान्तसमस्तान्यवेदनोदारः।
रमते रसज्ञ एको रम्ये स्वानन्दपर्यङ्के।।१६।।
उन्मूलितविषयारिः स्वीकृतवैराग्यसर्वस्वः।
स्वात्मानन्दमहिम्नि स्वाराज्येऽस्मिन् विराजते यतिराट्।।१७।।
सवितर्यपि शीतरुचौ चन्द्रे तीक्ष्णेऽप्यधो वहत्यग्नौ।
मायिकमिदमिति जानन् जीवन्मुक्तो न विस्मयी भवति।।१८।।
अज्ञानवैरिविजयी प्रज्ञामातङ्गमस्तकारूढः।
विहरति संयमिराजः समरससुखधाम्नि सर्वतो रम्ये।।१९।।
शान्ताहंकृतिदोषः सुसमाहितमानसः कोऽपि ।
पूर्णेन्दुशिशिरभावो राजत्यानन्दसत्यचिद्रसिकः।।२०।।
तिष्ठन् परत्र धाम्नि स्वीयसुखास्वादपरवशः कश्चित्।
क्वापि ध्यायति कुहचिद्गायति कुत्रापि नृत्यति स्वैरम्।।२१।।
अगृहीताघकलङ्कः प्रशमितसङ्कल्पविभ्रमः प्राज्ञः।
न्यक्कृतकार्यकलापस्तिष्ठत्यापूर्णसीमनि क्वापि।।२२।।
चपलं मनःकुरङ्गं चारु गृहीत्वा विमर्शवागुरया।
निगमारण्यविहारश्रान्तः शेते स्वधाम्नि कोऽप्येकः।।२३।।

दारुणचित्तव्याघ्रं धीरमनःखड्गधारया हत्वा।
अभयारण्ये कोऽपि स्वैरविहारी जयत्येकः।।२४।।
सज्जनहृदयसरोजोन्मीलनकरधीकरप्रसरः।
एको यतिवरपूषा निर्दोषश्चरति चिद्गगने।।२५।।
कुवलयविकासकारणमज्ञानध्वान्तकौमुदीप्रज्ञः।
शुद्धो मुनीन्द्रचन्द्रः सुरसेव्ये लसति विष्णुपदे।।२६।।
स्वानन्दामृतसेकैरान्तरसन्तापसन्ततिं शमयन्।
चित्रमचञ्चलवृत्तिश्चिद्व्योमनि भाति योगिवर्यघनः।।२७।।
सुमनःसौरभमञ्जुलसञ्चारनिवारिताखिलश्रान्तिः।
संयमिचारुसमीरो विहरत्यानन्दसंविदारामे।।२८।।
निःश्रेयससरसफले निर्मलविज्ञानपल्लवमनोज्ञे।
वीतभये विपिनतले यतिशितिकण्ठो विभाति कोऽप्येकः।।२९।।
निःसारभुवनमरुतलमुत्सायानन्दसाररसपूर्णे।
वरसरसि चिन्मयेऽस्मिन् परहंसः कोऽपि दीव्यति स्वैरम्।।३०।।
निखिलागमपल्लविते निगमशिरस्तन्त्रशीतलोद्याने।
मधुरतरमञ्जुवाचः कूजन्नास्ते यतीन्द्रकलकण्ठः।।३१।।
दारितमोहमदेभो दूरीकृतसकलदुरितशार्दूलः।
विबुधोत्तमसिंहवरो विहरत्यानन्दविततकान्तारे।।३२।।
अज्ञानमृगवरोज्झितविज्ञानोत्तुङ्गशृङ्गशिखरितले।
मतिसलिलशीतलाङ्गो यतिमदकलभो विराजते विहरन्।।३३।।
नासाञ्चलनिहिताक्षो नामादिभ्यो निवर्तितस्वान्तः।
तटिनीतटेषु तत्त्वं ध्यायन्नास्ते यतिः कोऽपि।।३४।।
आशावसनो मौनी नैराश्यालंकृतः शान्तः।
करतलभिक्षापात्रस्तरुतलनिलयो मुनिर्जयति।।३५।।

विजननदीकुञ्जगृहे मञ्जुलपुलिनैकमञ्जुतरतल्पे।
शेते कोऽपि यतीन्द्रः समरससुखबोधवस्तुनिस्तन्द्रः।।३६।।
भूतलमृदुतरशय्यः शीतलवातैकचामरःशान्तः।
राकाहिमकरदीपो राजति यतिराजशेखरः कोऽपि।।३७।।
विपुलशिलातलफलके विमलसरिद्वारिपरिवृतोदारे।
मन्दं मलयजपवने वाति प्रस्वपिति कोऽपि यतिराजः।।३८।।
आन्तरमेकं किञ्चित्सन्ततमनुसन्दधन्महामौनी।
करपुटभिक्षामश्नन्नटति हि वीथ्यां जडाकृतिः कोऽपि।।३९।।
प्रविलाप्य जगदशेषं परिशिष्टाखण्डवस्तुपरतन्त्रः।
प्राश्नाति कबलमास्ये प्राप्तं प्रारब्धकर्मणा कोऽपि।।४०।।
निन्दति किमपि न योगी नन्दति नैवापरं किमप्यन्तः।
चन्दनशीतलहृदयः कन्दलितानन्दमन्थरः स्वास्ते।।४१।।
सन्त्यज्य शास्त्रजालं संव्यवहारं च सर्वतस्त्यक्त्वा।
आश्रित्य पूर्णपदवीमास्ते निष्कम्पदीपवद्योगी।।४२।।
तृणपङ्क चर्चिताङ्गस्तृणमिव विश्वं विलोकयन्योगी।
विहरति रहसि वनान्ते विजरामरभूम्नि विश्रान्तः।।४३।।
पश्यति किमपि न रूपं न वदति न शृणोति किञ्चिदपि वचनम्।
तिष्ठति निरुपमभूमनि निष्ठामवलम्ब्य काष्ठवद्योगी।।४४।।
जात्यभिमानविहीनो जन्तुषु सर्वत्र पूर्णतां पश्यन्।
गूढं चरति यतीन्द्रो मूढवदखिलागमार्थतत्त्वज्ञः।।४५।।
उपधाय बाहुमूलं परिधायाकाशमवनिमास्तीर्य।
प्रस्वपिति विरतिवनितां परिरभ्यानन्दपरवशः कोऽपि।।४६।।
गतभेदवासनाभिः स्वप्रज्ञोदारवारनारीभिः।
रमते सह यतिराजस्त्रय्यन्तान्तःपुरे कोऽपि।।४७।।

वैराग्यविपुलमार्गं विज्ञानोद्दामदीपिकोद्दीप्तम्।
आरुह्य तत्त्वहर्म्यं मुक्त्या सह मोदते यतिराट्॥४८॥
विजनतलोत्पलमालां वनितावैतृष्ण्यकल्पवल्लीं च।
अपमानामृतगुटिकामात्मज्ञः कोऽपि गृह्णाति॥४९॥
न निषेधति दोषधिया गुणबुद्ध्या वा न किंचिदादत्ते।
आविद्यकमखिलमिति ज्ञात्वोदास्ते मुनिः कोऽपि॥५०॥
भूतं किमपि न मनुते भावि च किञ्चिन्नचिन्तयत्यन्तः।
पश्यति न पुरोवर्त्यपि वस्तु समस्तार्थसमरसः कोऽपि॥५१॥
निगृहीताखिलकरणो निर्मृष्टाशेषविषयेहः।
तृप्तिमनुत्तमसीमां प्राप्तः पर्यटति कोऽपि यतिवर्यः॥५२॥
सन्त्यजति नोपपन्नं नासम्पन्नं च वाञ्छति क्वापि।
स्वस्थः शेते यतिराडान्तरमानन्दमनुभवन्नेकः॥५३॥
कामपि विमलां पदवीमासाद्यानन्दसंविदुन्निद्राम्।
आस्ते भिक्षुक एको विहरन्निर्मुक्तबन्धनः स्वैरम्॥५४॥
वस्तुन्यस्तमिताखिलविश्वविहारे विलीनमनाः।
राजति परानपेक्षो राजाऽखिलवीतरागाणाम्॥५५॥
आचार्यापाङ्गदृशा समवाप्तापारसंविदाकारः।
प्रशमितसकलविभेदःपरहंसः कश्चिदाभाति॥५६॥
वर्णाश्रमव्यवस्थामुत्तीर्य विधूय विध्यादीन्।
परिशिष्यते यतीन्द्रः परिपूर्णानन्दबोधमात्रेण॥५७॥
क्षयमुपनीय समस्तं कर्म प्रारब्धमुपभुज्य।
प्रविगलितदेहबन्धः प्राज्ञो ब्रह्मैव केवलं भवति॥५८॥
स्तिमितमनन्तमनाद्यं सन्ततमानन्दबोधघनम्।
अविकल्पमाद्यमेकं सन्मात्रं विद्यते किमपि॥५९॥

अक्षरमजरमजातं सूक्ष्मतरापूर्वशुद्धविज्ञानम्।
प्रगलितसर्वक्लेशं परतत्त्वं वर्तते किमपि।।६०।।
सुखतरममरमदूरं सारं संसारवारिधेस्तीरम्।
समरसमभयमपारं तत्किञ्चन विद्यते तत्त्वम्।।६१।।
अरसमगन्धमरूपं विरजस्कमसत्त्वमतमस्कम्।
निरुपमनिर्भयतत्त्वं तत्किमपि द्योतते नित्यम्।।६२।।
इति गुरुकरुणापाङ्गादार्याभिर्द्व्यधिकषष्टिसंख्याभिः।
निरवद्याभिरवोचं निगमशिरस्तन्त्रसारभूतार्थम्।।६३।।
गदितमिममात्मविद्याविलासमनुवासरं स्मरन्विबुधः।
परिणतपरात्मविद्यः प्रपद्यते सपदि परमार्थम्।।६४।।
परमशिवेन्द्रश्रीगुरुशिष्येणेत्थं सदाशिवेन्द्रेण।
रचितेयमात्मविद्याविलासनाम्नी कृतिः पूर्णा।।६५।।

इति आत्मविद्याविलासः सम्पूर्णः।।